# ॥ सौभाग्यलक्ष्म्युपनिषत् ॥

(ऋग्वेदीया)

सौभाग्यलक्ष्मीकैवल्यविद्यावेद्यसुखाकृति ।
त्रिपान्नारायणानन्दरमचन्द्रपदं भजे ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि
प्रतिष्ठितमाविरावीर्म एधि ॥

वेदस्य म आणीस्थः श्रुतं मे मा
प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं
वदिष्यामि सत्यं वदिष्यामि ॥

तन्मामवतु तद्वक्तारमवतु अवतु मामवतु
वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

(सौभाग्यलक्ष्मीविद्याजिज्ञासा)

हरिः ॐ ॥ अथ भगवन्तं देवा ऊचुर्हे
भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् ।

तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा
यूयं सावधानमनसो भूत्वा शृणुत
तुरीयरूपां तुरीयातीतान् सर्वोत्कटां
सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां
चतुर्भुजां श्रियं हिरण्यवर्णामिति
पञ्चदशर्ग्भिर्ध्यायेत् । अथ पञ्चदश
ऋगात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता
ऋषयः । श्रीऋष्याद्या ऋचः
चतुर्दशानमृचामानन्दाद्यृषयः ।
हिरण्यवर्णाद्याद्यत्रयस्यानुष्टुप् छन्दः ।
कांसोस्मीत्यस्य बृहती छन्दः ।
तदन्ययोर्द्वयोस्त्रिष्टुप् । पुनरष्टकस्यानुष्टुप् ।
शेषस्य प्रस्तारपङ्क्तिः । श्र्यग्निर्देवता ।
हिरण्यवर्णामिति बीजम् । कांसोऽस्मीति शक्तिः ।

हिरण्मया चन्द्रा रजतस्रजा हिरण्या हिरण्यवर्णेति
प्रणवादिनमोन्तैश्चतुर्थ्यन्तैरङ्गन्यासः ।
अथ वक्त्रत्रयैरङ्गन्यासः । मस्तकलोचनश्रुतिघ्राण-
वदनकण्ठबाहुद्वयहृदयनाभिगुह्यपायूरुजानुजङ्घेषु
श्रीसूक्तैरेव क्रमशो न्यसेत् । अरुणकमलसंस्था
तद्रजःपुञ्जवर्णा करकमलधृतेष्टाऽभीतियुग्माम्बुजा च ।
मणिकटकविचित्रालङ्कृताकल्पजालैः सकलभुवनमाता
सन्ततं श्रीः श्रियै नः ॥ १॥

(सौभग्यलक्ष्मीचक्रम्)

तत्पीठकर्णिकायां ससाध्यं श्रीबीजम् ।
वस्वादित्यकलापद्मेषु श्रीसूक्तगतार्धार्धर्चा
तद्बहिर्यः शुचिरिति मातृकया च श्रियं यन्त्राङ्गदशकं
च विलिख्य श्रियमावाहयेत् । अङ्गैः प्रथमा वृत्तिः ।
पद्मादिभिर्द्वितीया । सोकेशैस्तृतीया । तदायुधैस्तुरीया
वृत्तिर्भवति । श्रीसूक्तैरावाहनादि । षोडशसहस्रजपः ।

(एकाक्षरीमन्त्रस्य ऋष्यादि)

सौभाग्यरमैकाक्षर्या भृगुनिचृद्गायत्री । श्रिय ऋष्यादयः ।
शमिति बीजशक्तिः । श्रीमित्यादि षडङ्गम् । भूयाद्भूयो
द्विपद्माभयवरदकरा तप्तकार्तस्वराभा शुभ्राभ्राभेभयुग्म-
द्वयकरधृतकुम्भाद्भिरासिच्यमाना । रक्तौघाबद्धमौलि-
र्विमलतरदुकूलार्तवालेपनाढ्या पद्माक्षी पद्मनाभोरसि
कृतवसतिः पद्मगा श्रीः श्रियै नः ॥ १॥

(एकाक्षरीचक्रम्)

तत्पीठम् । अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं
चतुरस्रं रमापीठं भवति । कर्णिकायां ससाध्यं श्रीबीजम् ।
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिः सन्नतिर्व्युष्टिः
सत्कृष्टिरृद्धिरिति प्रणवादिनमो तैश्चतुर्थ्यन्तैर्नवशक्तिं
यजेत् । अङ्गे प्रथमा वृतिः ।
वासुदेवाभिर्द्वितीया । बालाक्यादिभिस्तृतीया ।
इन्द्रादिभिश्चतुर्थी भवति ।
द्वादशलक्षजपः ।

(लक्ष्मीमन्त्रविशेषाः)

श्रीलक्ष्मीर्वरदा विष्णुपत्नी
वसुप्रदा हिरण्यरूपा
स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा
पद्मवासिनी पद्महस्ता
पद्मप्रिया मुक्तालङ्कारा चन्द्रसूर्या बिल्वप्रिया ईश्वरी
भुक्तिर्मुक्तिर्विभूतिरृद्धिः समृद्धिः कृष्टिः
पुष्टिर्धनदा धनेश्वरी
श्रद्धा भोगिनी भोगदा सावित्री धात्री
विधात्रीत्यादिप्रणवादिनमोन्ताश्चतुर्थ्यन्ता
मन्त्राः । एकाक्षरवदङ्गादिपीठम् । लक्षजपः ।
दशांशं तर्पणम् ।
दशांशं हवनम् । द्विजतृप्तिः । निष्कामानामेव
श्रीविद्यासिद्धिः ।
न कदापि सकामानामिति ॥ १॥

द्वितीयः खण्डः

(उत्तमाधिकारिणां ज्ञानयोगः)

अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं
तत्त्वं ब्रूहीति । तथेति स होवाच ।
योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्धते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १॥

समापय्य निद्रां सिजीर्णेऽल्पभोजी
    श्रमत्याज्यबाधे विविक्ते प्रदेशे ।
सदा शीतनिस्तृष्ण एष प्रयत्नोऽथ
    वा प्राणरोधो निजाभ्यासमार्गात् ॥ २॥

वक्त्रेणापूर्य वायुं हुतवलनिलयेऽपानमाकृष्य धृत्वा
    स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य ।
श्रोत्रे नेत्रे च नासापुटयुगलमतोऽनेन मार्गेण सम्यक्-
    पश्यन्ति प्रत्ययाशं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३॥

(नादाविर्भावपूर्वको ग्रन्थित्रयभेदः)

श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् ।
शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४॥

विचित्रघोषसंयुक्तानाहते श्रूयते ध्वनिः ।
दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५॥

सम्पूर्णहृदयः शून्ये त्वारम्भे योगवान्भवेत् ।
द्वितीया विघटीकृत्य वायुर्भवति मध्यगः ॥ ६॥

दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः ।
विष्णुग्रन्थेस्ततो भेदात्परमानन्दसम्भवः ॥ ७॥

अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् ।
तृतीयां यत्नतो भित्त्वा निनादो मर्दलध्वनिः ॥ ८॥

(अखण्डब्रह्माकारवृत्तिः)

महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम् ।
चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९॥

निष्पत्तौ वैष्णवः शब्दः क्वणतीति क्वणो भवेत् ।
एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १०॥

अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन् ।
भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११॥

(निर्विकल्पभावः)

योगेन योगं संरोध्य भावं भावेन चाञ्जसा ।
निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२॥

अहंभावं परित्यज्य जगद्भावमनीदृशम् ।
निर्विकल्पे स्थितो विद्वान्भूयो नाप्यनुशोचति ॥ १३॥

सलिले सैन्धावं यद्वत्साम्यं भवति योगतः ।
तथात्ममनसौरैक्यं समाधिरभिधीयते ॥ १४॥

यदा संक्षीयते प्राणो मानसं च प्रलीयते ।

तदा समरसत्वं यत्समाधिरभिधीयते ॥ १५॥

यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसङ्कल्पः समाधिरभिधीयते ॥ १६॥

प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७॥

तृतीय खण्डः

(आधारचकम्)

स्वयमुच्चलिते देहे देही नित्यसमाधिना ।
निश्चलं तं विजानीयात्समाधिरभिधीयते ॥ १८॥

यत्रयत्र मनो याति तत्रतत्र परं पदम् ।
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९॥ इति॥ ॥ २॥

अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति ।
तथेति स होवाच आधारे ब्रह्मचक्रं त्रिरावृत्तं
भगमण्डलाकारम् । तत्र मूलकन्दे शक्तिः पावकाकारं
ध्यायेत् । तत्रैव कामरूपपीठं सर्वकामप्रदं भवति ।
इत्याधारचक्रम् । द्वितीयं स्वाधिष्ठानचक्रं
षड्दलम् । तन्मध्ये पश्चिमाभिमुखं लिङ्गं
प्रवालाङ्कुरसदृशं ध्यायेत् । तत्रैवोड्याणपीठं
जगदाकर्षणसिद्धिदं भवति । तृतीयं
नाभिचक्रं पञ्चावर्तं सर्पकुटिलाकारम् ।
तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां
तनुमध्यां ध्यायेत् । सामर्थ्यशक्तिः सर्वसिद्धिप्रदा
भवति । मणिपूरचक्रं हृदयचक्रम् ।
अष्टदलमधोमुखम् । तन्मध्ये ज्योतिर्मयलिङ्गाकारं
ध्यायेत् । सैव हंसकला सर्वप्रिया सर्वलोकवश्यकरी
भवति । कण्ठचक्रं चतुरङ्गुलम् । तत्र वामे इडा
चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां
श्वेतवर्णां ध्यायेत् । य एवं वेदानाहता सिद्धिदा भवति ।
तालुचक्रम् । तत्रामृतधाराप्रवाहः ।
घण्टिकालिङ्गमूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं
दशद्वादशारम् । तत्र शून्यं ध्यायेत् । चित्तलयो भवति ।

सप्तमं भ्रूचक्रमङ्गुष्ठमात्रम् । तत्र ज्ञाननेत्रं
दीपशिखाकारं ध्यायेत् । तदेव कपालकन्दवाक्सिद्धिदं
भवति । आज्ञाचक्रमष्टमम् । ब्रह्मरन्ध्रं निर्वाणचक्रम् ।
तत्र सूचिकागृहेतरं धूम्रशिखाकारं ध्यायेत् । तत्र
जालन्धरपीठं मोक्षप्रदं भवतीति परब्रह्मचक्रम् ।
नवममाकाशचक्रम् । तत्र षोडशदलपद्ममूर्ध्वमुखं
तन्मध्यकर्णिकात्रिकूटाकारम् । तन्मध्ये ऊर्ध्वशक्तिः ।
तां पश्यन्ध्यायेत् । तत्रैव पूर्णगिरिपीठं
सर्वेच्छासिद्धिसाधनं भवति । सौभाग्यलक्ष्म्युपनिषदं
नित्यमधीते योऽग्निपूतो भवति । स वायुपूतो भवति । स
सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदास-
योगज्ञानवान्भवति । न स पुनरावर्तते न स पुनरावर्तत
इत्युपनिषत् ।

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्
आविरावीर्म एधि ॥ वेदस्य म आणीस्थः श्रुतं मे मा
प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि
सत्यं वदिष्यामि ॥ तन्मामवतु तद्वक्तारमवतु अवतु मामवतु
वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति श्रीसौभाग्यलक्ष्म्युपनिषत्समाप्ता ॥